# सूचीपत्र



इति

ॐ परमात्मने नमः ॥

# वाजसनेयसंहितोपनिषत् ॥१॥

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ।

ईशावास्यमिद ए सर्व्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् १
कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे २
असूर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनोजनाः ३
अनेजदेकम्मनसो जवीयो नैनद्देवा आप्नुवन
पूर्व्वमर्षत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मि-
न्नपो मातरिश्वा दधाति ॥ ४ ॥
तदेजति तन्नैजति तद्दूरे तद्वदन्तिके ।
तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यतः ५

यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥
यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥
स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥
अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायांरताः॥९॥
अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१०॥
विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥११॥
अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव तमो य उ सम्भूत्यां रताः॥१२॥
अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥
सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह ।

विनाशेन मृत्युं तीर्त्वा ऽसम्भूत्याऽमृतमश्नुते ॥१४॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वम्पूषन्नपावृणु सत्यधर्म्माय दृष्टये ॥१५॥
पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन् स-
मूह । तेजो यत्ते रूपंकल्याणतमन्तत्ते पश्यामि
योऽसावसौ पुरुषः सोऽहमस्मि ॥१६॥
वायुरनिलममृतमथेदं भस्मान्तᳩ शरीरम ।
ॐ क्रतो स्मर कृतᳩस्मर क्रतो स्मर कृतᳩस्मर१७
अग्ने नय सुपथा राये अस्मान् विश्वानि देव
वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भू-
यिष्ठान्ते नम उक्तिं विधेम ॥१८॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

इति [illegible]

ॐ तत्सत् ॥

# सामवेदीयतलवकारोपनिषत् २

ॐ आप्यायन्तु ममांगानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यांमा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः ॥ शान्तिः ॥

---

ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव

तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्व्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥
यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

इति प्रथमः खण्डः ॥ १ ॥

---

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् ॥ ६ ॥ १ ॥

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥१०॥२
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ११
प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम्१२
इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदी-
न्महतीविनष्टिः । भूतेषु भूतेषु विचिंत्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १३ ॥ ५ ॥
इति द्वितीयः खण्डः ॥ २ ॥

---

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो
विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं
विजयोऽस्माकमेवायं महिमेति ॥ १४ ॥ १ ॥
तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्ब्बभूव तन्न
व्यजानन्त किमिदं यक्षमिति ॥ १५ ॥ २ ॥
तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि कि-
मेतद्यक्षमिति तथेति ॥ १६ ॥ ३ ॥ तदभ्यद्रवत्त

मभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जा-
तवेदा वा अहमस्मीति ॥१७॥४॥ तस्मिंस्त्वयि
किं वीर्य्यमित्यपीदं सर्व्वं दहेयम् । यदिदं पृ-
थिव्यामिति ॥१८॥५॥ तस्मै तृणं निदधावेतद्द-
हेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स
तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्ष
मिति ॥ १६ ॥ ६ ॥

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमे-
तद्यक्षमिति तथेति ॥२०॥७॥ तदभ्यद्रवत्तमभ्यव-
दत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा
वा अहमस्मीति ॥२१॥८॥ तस्मिंस्त्वयि किं वी-
र्य्यमित्यपीदं सर्वमाददीयं यदिदं पृथिव्यामि-
ति ॥२२॥ ८ ॥ तस्मै तृणं निदधावेतदादत्स्वेति
तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत
एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति
॥२३॥१०॥ अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि कि-
मेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे॥
२४॥११॥ स तस्मिन्नेवाकाशे स्त्रियमाजगाम ब-

हुशोभमानामुमां हैमवतीं ताᳫं होवाच किमेतद्यक्षमिति ॥ २५ ॥ १२ ॥

इति तृतीयः खण्डः समाप्तः ॥ ३ ॥

---

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥ २६॥१॥ तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २७ ॥२॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८ ॥ ३ ॥

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीति न्यमीमिषदा ३ इत्यधिदैवतम् ॥२९॥४॥

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥३०॥५॥ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभि हैनं सर्व्वाणि भूतानि संवाञ्छन्ति ३१।६

उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥३२॥७॥ तस्यै तपो दमः कर्म्मेति प्रतिष्ठा वेदाः सर्व्वाङ्गानि सत्यमायतनम् ॥३३॥ ८ ॥ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ३४ ॥ ९ ॥

इति चतुर्थः खण्डः समाप्तः ॥

ॐ आप्यायन्तु ममांगानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यांमा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि संतु ते मयि संतु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति सामवेदीयतलवकारोपनिषत्समाप्ता ॥

ॐ तत्सत् ॥

# श्रीयजुर्वेदीयकठोपनिषत् ॥२॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

---

॥ॐ॥ उशन् ह वै वाजश्रवसः सर्ववेदसन्ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥१॥ तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश सोऽमन्यत ॥ २ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥३॥ स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयन्तं होवाच मृत्यवे त्वा ददामीति ॥४॥ बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किं स्विद्यमस्य कर्त्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥

अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे। सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः॥६॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान। तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥ आशाप्रतीचे सङ्गतं सूनृतांचेष्टापूर्ते पुत्रपशूंश्च सर्व्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन् वरान् वृणीष्व ॥९॥ शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमोमाभिमृत्यो। त्वत्प्रसृष्टं माभिवदेत् प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे॥१०॥ यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः। सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥

स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वाऽशनायापिपासे शो-

कातिगो मोदते स्वर्गलोके ॥१२॥ स त्वमग्निꣳ स्वर्ग्यमध्येपि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यं स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥१३॥ प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥१४॥ लोकादिमग्निन्तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा । स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥१५॥ तमब्रवीत्प्रीयमाणो महात्मा वरन्तवेहाद्य ददामि भूयः तवैव नाम्ना भविताऽयमग्निः सृङ्कांचेमामनेकरूपांगृहाण ॥ १६ ॥

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञन्देवमीड्यं विदित्वा निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥१७॥ त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥ एष तेऽग्निर्नचिकेतः

स्वर्ग्योऽयमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरन्नचिकेतो वृणीष्व ॥ १९ ॥

येयम्प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥२०॥ देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥

देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥ शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयञ्च जीव शरदो यावदिच्छसि ॥२३॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकाञ्च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २४ ॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषए सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥१॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥

स त्वं प्रियान् प्रियरूपाएश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः । नैताए सृङ्कां वित्तमयीमवाप्तो यस्यामज्जन्ति वहवो मनुष्याः ॥३॥ दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सिनन्नचिकेतसं मन्ये न त्वा कामा वहवो लोलुपन्त ॥ ४ ॥ अविद्यायामन्तरे वर्त्तमानाः स्वयम्धीराः पण्डितम्मन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अंधेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥

न साम्परायः प्रतिभाति वालम्प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥६॥ श्रवणायापि

बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न वि-द्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥ न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमनुप्रमाणात् ॥८॥ नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ । यान्त्वमापः सत्यधृतिर्वतासित्वादृङ्नो भू-यान्नचिकेतः प्रष्टा ॥ ९ ॥

जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्रा-प्यते हि ध्रुवन्तत् । ततो मया नाचिकेतश्चितो-ऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥ कामस्याप्तिञ्जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् । स्तोमं महदुरुगायम्प्रतिष्ठान्दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥

तन्दुर्दर्शंगूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठम्पुरा-णम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥ एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । समोदते मोद-

नीयए हि लव्ध्वा विहृतए सद्म नचिकेत स-
मन्ये ॥१३॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रा-
स्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च य-
त्तत्पश्यसि तद्वद ॥ १४ ॥

सर्व्वे वेदा यत्पदमामनन्ति तपाएसि सर्व्वाणि
च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्य्यञ्चरन्ति तत्ते
पदए संग्रहेण ब्रवीम्योमित्येतत् ॥१५॥ एतद्ध्ये-
वाक्षरम्ब्रह्म एतदेवाक्षरम्परम् । एतद्ध्येवाक्षरं
ज्ञात्वा यो यदिच्छति तस्य तत् ॥१६॥ एतदा-
लम्बनएश्रेष्ठमेतदालम्बनम्परम् । एतदालम्बनं
ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न
वभूव कश्चित् । अजो नित्यः शाश्वतोऽयम्पुराणो
न हन्यते हन्यमाने शरीरे ॥ १८ ॥

हन्ता चेन्मन्यते हन्तुए हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायए हन्ति न हन्यते॥
१६॥ अणोरणीयान्महतो महीयानात्मास्य ज-

न्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ।
आसीनो दूरं व्रजति शयानो याति सर्व्वतः ।
कस्तम्मदामदन्देवं मदन्यो ज्ञातुमर्हति ॥२०॥

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २१ ।
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ २२ ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥२३॥
यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनं । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २४ ॥

इति काठोपनिषदि द्वितीया वल्ली ॥ २ ॥

---

ऋतं पिबन्तौ सुकृतस्य लोके गुहाम्प्रविष्टौ परमे परार्द्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥

यः सेतुरीजानानामक्षरम्ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि॥२॥
आत्मानꣳरथिनं विद्धि शरीरं रथमेवꣳ तु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥
इन्द्रियाणि हयानाहुर्विषया स्तेषु गोचरान् :
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनोषिणः ॥४॥
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥५॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ६
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति सꣳसारञ्चाधिगच्छति ॥७॥
यस्तु विज्ञानवान् भवति समनस्कः सदाशुचिः
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ८
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ९
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥१०॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥११
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्‌या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥१२
यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गम्पथस्तत्कवयो वदन्ति ॥१४॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत् । अनाद्यनन्तम्महतः परंध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥१५॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳसनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥ य इमं परमं गुह्यं श्रावयेद्ब्रह्मसन्सदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥१७॥ इति प्रथमाध्याये तृतीया वल्ली ॥३॥

इति प्रथमोऽध्यायः समाप्तः ॥

सुभृतो गर्भिणीभिः। दिवे दिव ईड्यो जाग्रव-
द्भिर्हविष्मद्भिर्मनुष्येभिरग्निः। एतद्वै तत् ॥ ८ ॥
यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छति। तन्देवाः
सर्व्वेऽर्पितास्तदु नात्येति कश्चन। एतद्वै तत् ॥९॥

यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स
मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

मनसैवेदमाप्तव्यन्नेह नानास्ति किञ्चन। मृत्योः
स मृत्युङ्गच्छति य इह नानेव पश्यति॥११॥ अं-
गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशा-
नो। भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै-
तत् ॥१२॥ अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूम-
कः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः।
एतद्वै तत् ॥ १३ ॥

यथोदकन्दुर्गे वृष्टम्पर्वतेषु विधावति। एवं ध-
र्म्मान् पृथक् पश्यंस्तानेवानुविधावति ॥१४॥ य-
थोदकं शुद्धे शुद्धमासिक्तन्तादृगेव भवति। एवं
मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

इति चतुर्थी वल्ली समाप्ता ॥ ४ ॥

पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वैतत् ॥१॥ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

ऊर्द्ध्वम्प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनम्विश्वे देवा उपासते ॥ ३ ॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वैतत् ॥४॥

न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥ हन्त त इदम्प्रवक्ष्यामि गुह्यम्ब्रह्म सनातनं । यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ ७ ॥

य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाणः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति

काश्चन । एतद्वै तत् ॥८॥ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं प्रतिरूपो बहिश्च ॥९॥ वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥१०॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥११

एको वशी सर्वभूतान्तरात्मा एकं रूपम्बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतन्नेतरेषाम् ॥१२॥ नित्योऽनित्यानाश्चेतनश्चेतनानामेको बहूनां योविदधाति कामान । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

तदेतदिति मन्यन्तेऽनिर्देश्यम्परमं सुखं । कथन्नु तद्विजानीयां किमु भाति विभाति वा ॥१४॥ न तत्र सूर्यो भाति न चन्द्रतारकन्नेमा विद्युतो

भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वन्तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

---

ऊर्ध्व मूलोऽवाक् शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन । एतद्वैतत् ॥१॥ यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्य्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

इह चेदशकद्बोद्धुम्प्राक् शरीरस्य विस्रसः । ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥ यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके । यथाप्सु परीव ददृशे तथा गन्धर्व्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

इन्द्रियाणाम्पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्वादधि महानात्मा महतोऽव्यक्त मुत्तमम् ॥७
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥ ८॥
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमाङ्गतिम् ॥१०॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥११॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥
अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥१३॥
यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥
यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।

अथ मर्त्यो मृतो भवत्येतावदनुशासनम् ॥ १५ ॥

शतञ्चैका च हृदयस्य नाड्यस्तासाम्मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥ मृत्युप्रोक्तान्नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिञ्च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति कठोपनिषदि द्वितीयाध्याये षष्ठीवल्ली समाप्ता ॥ ६ ॥

॥ ॐ तत्सत् ॥

# अथर्ववेदीयप्रश्नोपनिषदारम्भ

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवा५ सस्तनूभिः । व्यशेम देवहितं यदायुः॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो,बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ सुकेशा च भारद्वाजः शैव्यश्च सत्यकामः सौर्य्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्वं ह वो व-

ष्याम इति ॥२॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते । रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्व्वं यन्मूर्त्तञ्चामूर्त्तञ्च तस्मान्मूर्त्तिरेव रयिः५

यथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान्रश्मिषु सन्निधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्व्वं प्रकाशयति तेन सर्व्वान् प्राणान् रश्मिषु सन्निधत्ते ॥६॥ स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तम् ॥ ७॥ विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजानामुदयत्येष सूर्य्यः ॥ ८ ॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चोत्त-रञ्च । तद्येह वै तदिष्टापूर्त्ते कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुन-रावर्त्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥९॥

अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्यया-त्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणाना-मायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्त इत्येष निरोधस्तदेष श्लोकः ॥१०॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्व्वन्तीतर इतरस्मिन् ॥ १२ ॥

अहो रात्रो वै प्रजापतिस्तस्याहरेव प्राणो रा-त्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति । ये दिवा

रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥१४॥ तद्ये ह तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्य्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

इति प्रथमः प्रश्नः ॥ १ ॥

---

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजां विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥१॥ तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च । ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥

तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाऽहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमव-

ष्ठम्य विधारयामीति ॥३॥ तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्द्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व्व एवोत्क्रामन्ते तस्मिꣳश्च प्रतिष्ठमाने सर्व्व एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्व्वा एवोत्क्रामंते तस्मिꣳश्च प्रतिष्ठमाने सर्व्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रञ्च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

एषोऽग्निस्तपत्येष सूर्य्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत् ५ अरा इव रथनाभौ प्राणे सर्व्वं प्रतिष्ठितं । ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥ प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे । तुभ्यं प्राणः प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥७॥ देवानामसि वह्नितमः पितृणां प्रथमा स्वधा । ऋषीणाञ्चरितं सत्यमथर्व्वाङ्गिरसामसि ॥८॥ इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता । त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषाम्पतिः ॥९॥ यदा त्वमभिवर्षस्यथेमाः प्राण ते

ाजाः । आनन्दरूपास्तिष्ठन्ति कामायान्नं भवि-
ष्यतीति ॥ १० ॥

ात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।
ायमाद्यस्य दातारः पिता त्वं मातरिश्व नः ११
या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः १२
प्राणस्येदं वशे सर्व्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञाञ्च विधेहि न इति

इति द्वितीयः प्रश्नः ॥ २ ॥

---

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भग-
वन् कुत एष प्राणो जायते कथमायात्यस्मिञ्छ-
रीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते के-
नोत्क्रमते कथं वाह्यमभिधत्ते कथमध्यात्ममिति
॥१॥ तस्मै स होवाचाति प्रश्नान् पृच्छसि ब्रह्मि-
ष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

आत्मन एष प्राणो जायते । यथैषा पुरुषे छा-
यैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरी-

र ॥३॥ यथा सम्राडेवाधिकृतान्विनियुङ्क्ते । एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः । इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥४॥ पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समन्नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाड़ीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाड़ीसहस्राणि भवन्त्यासु व्यानश्चरति॥६॥ अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥ आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥८॥ तेजो ह वै उदानस्तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः॥९॥ यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः ।

हात्मना यथा सङ्कल्पितं लोकं नयति: ॥१०॥

य एवं विद्वान् प्राणं वेद । न हास्य प्रजा
ीयतेऽमृतो भवति तदेष श्लोकः ॥११॥ उत्पत्ति
ायतिं स्थानं विभुत्वञ्चैव पञ्चधा । अध्यात्मञ्चैव
ाणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत
ति ॥ १२ ॥ इति तृतीयः प्रश्नः ॥ ३ ॥

अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ । भग-
वन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन्
जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत्
सुखं भवति कस्मिन्नु सर्व्वे सम्प्रतिष्ठिता भ-
वन्तीति ॥ १ ॥

तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्क-
स्यास्तं गच्छतः सर्व्वा एतस्मिंस्तेजोमण्डल एकी-
भवन्ति । ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै
तत्सर्व्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष
पुरुषो न शृणोति न पश्यति न जिघ्रति न रस-
यते न स्पृशते नाभिवदते नादत्ते नानन्दयते न
विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति। गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्य्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ३

यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स समानः। मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥४॥

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च सच्चासच्च सर्व्वं पश्यति सर्व्वः पश्यति ॥ ५ ॥

स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत् सुखं भवति ॥ ६ ॥ स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते। एवं ह वै तत्सर्व्वं पर आत्मनि सम्प्रतिष्ठते ॥७॥ पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च

श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च मनश्च मन्तव्यंच बुद्धिश्च बोद्धव्यंचाहङ्कारश्चाहङ्कर्त्तव्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यंच प्राणश्च विधारयितव्यञ्च ॥ ८ ॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः । स परेऽक्षरे आत्मनि सम्प्रतिष्ठते ॥९॥ परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्व्वो भवति तदेष श्लोकः ॥१०॥ विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥

इति चतुर्थः प्रश्नः समाप्तः ॥ ४ ॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥ १ ॥

तस्मै स होवाच । एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥ स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवति॥३॥ अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते ॥ ४ ॥

यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः । यथा पादोदरस्त्वचाविनिर्मुच्यत एवं ह वै स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥६॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयंते। तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति ॥ ७ ॥

इति पञ्चमप्रश्नः समाप्तः ॥ ५ ॥

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिष कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति॥१॥ तस्मै स होवाच इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥

स ईक्षांचक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् । मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्मलोका लोकेषु च नाम च ॥ ४ ॥

स यथेमा नद्यः स्यन्दमानः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥५॥ अरा इव रथनाभौ कलायस्मिन् प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद । नातः परमस्तीति ॥७॥ ते तमर्चयन्तस्त्वं हि नः पिता यो[illegible]ायाः परं पारं तारयसीति ।

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

इति षष्ठः प्रश्नः समाप्तः ॥ ६ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ओम् शांतिः शांतिः शांतिः ॥

॥ इति प्रश्नोपनिषत् समाप्ता ॥

---

॥ ॐ तत्सत् ॥

# अथर्ववेदीयमुण्डकोपनिषदारम्भः ॥ ५ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्तिन इंद्रो वृद्धश्रवाः

स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्तार्च्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ओम् शांतिः शांतिः शांतिः ॥

॥ ॐ ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्व्वविद्याप्रतिष्ठामथर्व्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

अथर्व्वणे यां प्रवदेत ब्रह्माथर्व्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्यां । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवतीति ॥३॥ तस्मै स होवाच। द्वे विद्ये वेदितव्य इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥

तत्रापरा ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति अथ परा यया तदक्षरमधिगम्यते॥५॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥६॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ॥ ७ ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम् ॥ ८ ॥

यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते ॥ ९ ॥

इति प्रथममुण्डके प्रथमः खण्डः ॥१॥

---

तदेतत्सत्यं मन्त्रेषु कर्म्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥ यदा लेलायते ह्यर्चिः समिद्धे हव्य-

वाहने। तदाज्यभागावन्तरेणाहुतीः प्रतिपाद-
येच्छ्रद्धया हुतम् ॥२॥ यस्याग्निहोत्रमदर्शमपौर्ण-
मासमचातुर्मास्यमनाग्रयणमतिथिवर्जितञ्च। अ-
हुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लो-
कान् हिनस्ति ॥३॥ काली कराली च मनोजवा
च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी
विश्वरूपी च देवी लेलायमाना इति सप्त
जिह्वाः ॥ ४ ॥ एतेषु यश्चरते भ्राजमानेषु यथा
कालं चाहुतयो ह्याददायन्। तन्नयन्त्येताः
सूर्य्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः
॥ ५ ॥ एह्येहीति तमाहुतयः सुवर्चसः सूर्य्यस्य
रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवद-
न्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः॥६॥
प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु
कर्म्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं
ते पुनरेवापि यन्ति ॥७॥ अविद्यायामन्तरे वर्त्त-
मानाः स्वयं धीराः पण्डितम्मन्यमानाः। जङ्घ-
न्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना
यथान्धाः ॥ ८ ॥

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥ इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चाविशन्ति ॥ १० ॥ तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः । सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१२॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥

इति प्रथममुण्डकं समाप्तम् ॥ १ ॥

तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥ दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥२॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥४॥ तस्मादग्निः समिधो यस्य सूर्य्यः सोमात् पर्जन्य ओषधयः पृथिव्याम् । पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥५॥

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्व्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य्यः ॥६॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयां-

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं सन्धी यत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥३॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥५॥ अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः । ओँमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

यः सर्व्वज्ञः सर्व्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥७॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥ ९ ॥ न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥१०॥ ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्द्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्टम्॥११॥इति द्वितीयमुण्डके द्वितीयःखण्डः

इति द्वितीयमुण्डकं समाप्तम् ॥

---

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति ॥१॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥२॥ यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् वि-
द्वान् भवते नातिवादी । आत्मक्रीड आत्मरति-
क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥ सत्येन ल-
भ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण
नित्यं । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं प-
श्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥ सत्यमेव जयते
नानृतं सत्येन पन्था विततो देवयानः । येनाक्र-
मन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं नि-
धानम् ॥ ६ ॥

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्म-
तरं विभाति । दूरात्सुदूरे तदिहान्तिके च प-
श्यत्स्विहैव निहितं गुहायां ॥७॥ न चक्षुषा गृ-
ह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते नि-
ष्कलं ध्यायमानः ॥ ८ ॥ एषोऽणुरात्मा चेतसा
वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश । प्रा-
णैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभ-
वत्येष आत्मा ॥९॥ यं यं लोकं मनसा संविभाति

विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

---

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः ॥ १ ॥ कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥२॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥ नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥४॥ संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः

सर्वमेवाविशन्ति ॥५॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॥६॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥७॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥८॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति। नास्याब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥ तदेतदृचाऽभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः। स्वयं जुह्वत एकर्षिं श्रद्धयन्तस्तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥ तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते। नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिः व्यशेम देवहितं यदायुः स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्तिनो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति मुण्डकोपनिषत्समाप्ता ॥

# अथर्ववेदीयमाण्डूक्योपनिषदारम्भः ॥ ५ ॥

॥ ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शां

ॐ मित्येतदक्षरमिदꣳ सर्व्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्व्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥ सर्व्वꣳ ह्येतद्‌ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥२॥

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥३॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥४॥

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥ एष सर्व्वेश्वर एष सर्व्वज्ञ एषोऽन्तर्य्याम्येष योनिः सर्व्वस्य प्रभावाप्ययौ हि भूतानाम् ॥ ६ ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा
त्रा मात्राश्च पादा अकार उकारो मकार
ति ॥ ८ ॥

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मा-
ाप्तेरादिमत्वाद्वाप्नोति ह वै सर्व्वान् कामाना-
देश्च भवति य एवं वेद ॥ ९ ॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्क-
र्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च
भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मि-
तेरपीतेर्वामिनोति ह वा इदं सर्व्वमपीतिश्च
भवति य एवं वेद ॥ ११ ॥

अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शि-
वोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽ-
त्मानं य एवं वेद य एवं वेद ॥ १२ ॥ इति
माण्डूक्योपनिषत् समाप्तिङ्गता ॥ ॐ तत्सत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्ये-
स्थिरैरङ्गैस्तुष्टुवांस स्तनूभिः।

# यजुर्वेदीयतैत्तिरीयोपनिषदारम्भः ॥ ७ ॥

॥ शिक्षोपनिषद् ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । ...

वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥
सत्यं वदिष्यामि पञ्च च ॥ १ ॥

इति प्रथमोऽनुवाकः ॥

---

ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शीक्षाध्यायः॥ १ ॥ शिक्षां पञ्च ॥

इति द्वितीयोऽनुवाकः ॥

---

सह नौ यशः। सह नौ ब्रह्मवर्चसम्। अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः॥ पञ्चस्वधिकरणेषु। अधिलोकमधिज्योतिषमधिप्रजमध्यात्मम्। ता महासꣳहिता इत्याचक्षते। अथाधिलोकम्। पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः ॥१॥ वायुः सन्धानम्। इत्यधिलोकम्। अथाधिज्योतिषम्। अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपः सन्धिः। वै-

दात: सन्धानम् । इत्यधिज्योतिषम् । अथाधि-
विद्यम् । आचार्य्यः पूर्वरूपम् ॥२॥ अन्तेवास्यु-
त्तररूपम् । विद्या सन्धिः । प्रवचनꣳ सन्धानम् ।
इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् ।
पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धा-
नम् । इत्यधिप्रजम् ॥३॥ अथाध्यात्मम् । अधरा
हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्
सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इ-
तीमा महासꣳहिताः । य एवमेता महासꣳहि-
ता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः ।
ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥४॥ सन्धि-
राचार्य्यः पूर्वरूपमित्यधिप्रजं लोकेन ॥

इति तृतीयोऽनुवाकः ॥

---

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्य-
मृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अ-
मृतस्य देवधारणो भूयासम् । शरीरं मे विचर्ष-
णम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि वि-

श्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥ १ ॥ कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ॥२॥ यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । निभगाऽहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ ३ ॥ वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा । धारयन्तु सर्वतः स्वाहैकञ्च ॥ इति चतुर्थोऽनुवाकः ॥

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः ।

तासामुह स्मैतां चतुर्थीम् । माहाचमस्य प्रवे-
दयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गा-
न्यन्या देवताः । भूरिति वा अयं लोकः । भुव
इत्यन्तरिक्षम् । सुवरित्यसौ लोकः ॥१॥ मह इ-
त्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते ।
भूरिति वा अग्निः । भुव इति वायुः । सुवरि-
त्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव
सर्वाणि ज्योतींषि महीयन्ते । भूरिति वा ऋ-
चः । भुव इति सामानि । सुवरिति यजूंषि ॥
२ ॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा
महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः ।
सुवरिति व्यानः । मह इत्यन्नं । अन्नेन वाव सर्वे
प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । च-
तस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद
ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥३॥ असौ
लोको यजूंषि वेद द्वे च ॥ इति पञ्चमोऽनुवाकः
स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो
मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालु-

के। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ॥१॥ सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मन आनन्दम्। शान्तिसमृद्धममृतं। इति प्राचीनयोग्योपास्स्व॥२॥ वायावमृतमेकञ्च॥ इति षष्ठोऽनुवाकः॥

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्। अथाध्यात्मम्। प्राणोव्यानोऽपान उदानः समानः। चक्षुः श्रोत्रं मनो वाक् त्वक्। चर्म माꣳसꣳस्नावास्थिमज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳसर्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति॥१॥ सर्वमेकञ्च॥ इति सप्तमोऽनुवाकः॥

ओमिति ब्रह्म । ओमितीदꣳसर्वम् । ओमित्येतदनुकृति ह स्म वा अप्योश्रावयन्ति । ओमिति सामानि गायन्ति । ओꣳशोमिति शस्त्राणि शꣳसन्ति । ओमित्यध्वर्य्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्म प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥१॥ ॐ दश ॥

इति अष्टमोऽनुवाकः ॥ ८ ॥

---

ऋतञ्च स्वाध्यायप्रवचने च । सत्यञ्च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रञ्च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषञ्च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपो नित्यः पौरुशि-

षिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥१॥ प्रजा च स्वाध्यायप्रवचने च षट् च ॥ इति नवमोऽनुवाकः ॥ ६ ॥

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि द्रविणंसवर्चसम् सुमेधा अमृतोऽक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥ १ ॥ अहंएषट् ॥

इति दशमोऽनुवाकः ॥

---

वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मंचर । स्वाध्यायान्मा प्रमदः । आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥१॥ देवपितृकार्य्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्य्यदेवो भव। अतिथिदेवो । यान्यनवद्यानि कर्म्माणि । तानि सेवित

व्यानि । नो इतराणि । यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि ॥२॥ नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयादेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥ ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्त्तेरन् । तथा तत्र वर्त्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्त्तेरन् । तथा तेषु वर्त्तेथाः एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् ॥ ४ ॥ स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् तानि त्वयोपास्यानि विचिकित्सा वा स्यात्तेषु वर्त्तेरन् सप्त च ॥

इत्येकादशोऽनुवाकः ॥

शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्य्यमा । शन्न इन्द्रो वृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् आवीन्माम् । आवीद्वक्तारम् ॥ १ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ सत्यमवादिषं पञ्च च । इति द्वादशोऽनुवाकः ॥ १२ ॥

शन्नः शीक्षा० सह नौ यश्छन्दसां भूः स यः पृथिव्योमित्यृतञ्चाहं वेदमनूच्य शन्नो द्वादश॥१२॥ शन्नो मह इत्यादित्यो नो इतराणि त्रयोविंशतिः ॥ २३ ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्य्यमा । शं न इन्द्रो वृहस्पतिः शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति शिक्षाध्यायः प्रथमा वल्ली ॥ १ ॥

